# श्रीविष्णुमहिम्नःस्तोत्रम्

श्री गणेशाय नमः ।
महिम्नस्ते पारं विधिहरफणीन्द्रप्रभृतयो
विदुर्नाद्यप्यज्ञश्चलमतिरहो नाथ नु कथम् ।
विजानीयामद्धा नलिननयनात्मीयवचसो
विशुद्ध्यै वक्ष्यामीषदपि तु तथापि स्वमतितः ॥ १॥

यदाहुर्ब्रह्मैके पुरुषमितरे कर्म च
परेऽपरे बुद्धं चान्ये शिवमपि च धातारमपरे ।
तथा शक्तिं केचिद्गणपतिमुतार्कं च
सुधियो मतीनां वै भेदात्त्वमसि तदशेषं मम मतिः ॥ २॥

शिवः पादाम्भस्ते शिरसि धृतवानादरयुतं
तथा शक्तिश्चासौ तव तनुजतेजोमयतनुः ।
दिनेशं चैवामुं तव नयनमूचुस्तु नियमास्त्वदन्यः
को ध्येयो जगति किल देवो वद विभो ॥ ३॥

क्वचिन्मत्स्यः कूर्मः क्वचिदपि वराहो नरहरिः
क्वचित्खर्वो रामो दशरथसुतो नन्दतनयः ।
क्वचिद्बुद्धः कल्किर्विहरसि कुभारापहृतये
स्वतन्त्रोऽजो नित्यो विभुरपि तवाक्रीडनमिदम् ॥ ४॥

हृताम्नायेनोक्तं स्तवनवरमाकर्ण्य विधिना
द्रुतं मात्स्यं धृत्वा वपुरजरशङ्खासुरमथो ।
क्षयं नीत्वा मृत्योर्निगमगणमुद्धृत्य जलधेरशेषं
सङ्गुप्तं जगदपि च वेदैकशरणम् ॥ ५॥

निमज्जन्तं वार्धौ नगवरमुपालोक्य
सहसा हितार्थं देवानां कमठवपुषाऽऽविश्य गहनम् ।
पयोराशिं पृष्ठे तमजित सलीलं घृतवतो
जगद्धातुस्तेऽभूत्किमु सुलभभाराय गिरिकः ॥ ६॥

हिरण्याक्षः क्षोणीमविशदसुरो नक्रनिलयं
समादायामर्त्यैः कमलजमुखैरम्बरगतैः ।
स्तुतेनानन्तात्मन्नचिरमवभाति स्म
विघृता त्वया दंष्ट्राग्रेऽसाववनिरखिला कन्दुक इव ॥ ७॥

हरिः क्वास्तीत्युक्ते दनुजपतिनाऽऽपूर्य
निखिलं जगन्नादैः स्तम्भान्नरहरिशरीरेण करजैः ।
समुत्पत्याशूरावसुरवरमादारितवतस्तवाख्याता
भूमन्किमु जगति नो सर्वगतता ॥ ८॥

विलोक्याजं द्वार्गं कपटलघुकायं सुररिपुर्निषिद्धोऽपि
प्रादादसुरगुरुणात्मीयमखिलम् ।
प्रसन्नस्तद्भक्त्या त्यजसि किल नाद्यापि
भवनं बलेर्भक्ताधीन्यं तव विदितमेवामरपते ॥ ९॥

समाधावासक्तं नृपतितनयैर्वीक्ष्य पितरं हतं
बाणै रोषाद्गुरुतरमुपादाय परशुम् ।
विना क्षत्रं विष्णो क्षितितलमशेषं कृतवसोऽसकृत्किं
भूभारोद्धरणपटुता ते न विदिता ॥ १०॥

समाराध्योमेशं त्रिभुवनमिदं वासवमुखं वशे
चक्रे चक्रिन्नगणयदनिशं जगदिदम् ।
गतोऽसौ लङ्केशस्त्वचिरमथ ते बाणविषयं
न केनाप्तं त्वत्तः फलमविनयस्यासुररिपो ॥ ११॥

क्वचिद्दिव्यं शौर्यं क्वचिदपि रणे कापुरुषता
क्वचिद्गीताज्ञानं क्वचिदपि परस्त्रीविहरणम् ।
क्वचिन्मृत्स्नाशित्वं क्वचिदपि च वैकुण्ठविभवश्चरित्रं
ते नूनं शरणद विमोहाय कुधियाम् ॥ १२॥

न हिंस्यादित्येद्घ्रुवमवितथं वाक्यमबुधैरथाग्नीषोमीयं
पशुमिति तु विप्रैर्निगदितम् ।
तवैतन्नास्थानेऽसुरगणविमोहाय गदतः समृद्धिर्नीचानां
नयकर हि दुःखाय जगतः ॥ १३॥

विभागे वर्णानां निगमनिचये चावनितले
विलुप्ते सञ्जातो द्विजवरगृहे शम्भलपुरे ।
समारुह्याश्वं स्वं लसदसिकरो
म्लेञ्च्छनिकरान्निहन्ताऽस्युन्मत्तान्किल कलियुगान्ते युगपते ॥ १४॥

गभीरे कासारे जलचरवराकृष्टचरणो रणेऽशक्तो
मज्जन्नभयद जलेऽचिन्तयदसौ ।
यदा नागेन्द्रस्त्वां सपदि पदपाशादपगतो गतः

स्वर्गं स्थानं भवति विपदां ते किमु जनः ॥ १५॥

सुतैः पृष्टो वेधाः प्रतिवचनदानेऽप्रभुरसावथात्मन्यात्मानं
शरणमगमत्त्वां त्रिजगताम् ।
ततस्तेऽस्तातङ्का ययुरथ मुदं हंसवपुषा
त्वया ते सार्वज्ञं प्रथितममरेशेह किमु नो ॥ १६॥

समाविद्धो मातुर्वचनविशिखैराशु विपिनं तपश्चक्रे
गत्वा तव परमतोषाय परमम् ।
ध्रुवो लेभे दिव्यं पदमचलमल्पेऽपि वयसि
किमस्त्यस्मिँल्लोके त्वयि वरद तुष्टे दुरधिगम् ॥ १७॥

वृकाद्भीतस्तूर्णं स्वजनभयभित्त्वां
पशुपतिर्भ्रमँल्लोकान्सर्वान् शरणभुपयातोऽथ दनुजः ।
स्वयं भस्मीभूतस्तव वचनभङ्गोद्गतमती
रमेशाहो माया तव दुरनुमेयाऽखिलजनैः ।१८॥

हृतं दैत्यैर्द्दृष्ट्वाऽनृतघटमजय्यैस्तु नयतः कटाक्षैः
संमोहं युवतिवरवेषेण दितिजान् ।
समग्रं पीयूषं सुभग सुरपूगाय ददतः समस्यापि
प्रायस्तव खलु हि भृत्येष्वभिरतिः ॥ १९॥

समाकृष्टा दुष्टैर्दुपदतनयाऽलब्धशरणा सभायां
सर्वात्मंस्तव शरणमुच्चैरुपगता ।
समक्षं सर्वेषामभवदचिरं चीरनिचयः स्मृतेस्ते
साफल्यं नयनविषयं नो किमु सताम् ॥ २०॥

वदन्त्येके स्थानं तव वरद वैकुण्ठमपरे
गवां लोकं लोकं फणिनिलयपातालमितरे ।
तथान्ये क्षीरोदं हृदयनलिनं चापि तु सतां न मन्ये
तत्स्थानं त्वहमिह च यत्रासि न विभो ॥ २१॥

शिवोऽहं रुद्राणामहममरराजो दिविषदां मुनीनां
व्यासोऽहं सुरवर समुद्रोऽस्मि सरसाम् ।
कुबेरो यक्षाणामिति तव वचो मन्दमतये न
जाने तज्जातं जगति ननु यन्नासि भगवन् ॥ २२॥

शिरो नाको नेत्रे शशिदिनकरावम्बरमुरो दिशः

श्रोते वाणी निगमनिकरस्ते कटिरिला ।
अकूपारो बस्तिश्चरणमपि पातालमिति
वै स्वरूपं तेऽज्ञात्वा नृतनुमवजानन्ति कुधियः ॥ २३॥

शरीरं वैकुण्ठं हृदयनलिनं वाससदनं मनोवृत्तिस्ताक्ष्र्यो
मतिरियमथो सागरसुता ।
विहारस्तेऽवस्थात्रितयमसवः पार्षदगणो न पश्यत्यज्ञा
त्वामिह बहिरहो याति जनता ॥ २४॥

सुघोरं कान्तारं विशति च तडागं सुगहनं
तथोत्तुङ्गं शृङ्गं सपदि च समारोहति गिरेः ।
प्रसूनार्थं चेतोम्बुजममलमेकं त्वयि विभो
समर्प्याज्ञस्तूर्णं वत न च सुखं विन्दति जनः ॥ २५॥

कृतैकान्तावासा विगतनिखिलाशाः शमपरा
जितश्वासोच्छ्वासास्त्रुटितभवपाशाः सुयमिनः ।
परं ज्योतिः पश्यन्त्यनघ यदि पश्यन्तु मम तु
श्रियाश्लिष्टं भूयान्नयनविषयं ते किल वपुः ॥ २६॥

कदा गङ्गोत्तुङ्गामलतरतरङ्गाच्छपुलिने
वसन्नाशापाशादखिलखलदाशाद् अपगतः ।
अये लक्ष्मीकान्ताम्बुजनयन तातामरपते
प्रसीदेत्याजल्पन्नमरवर नेष्यामि समयम् ॥ २७॥

कदा शृङ्गैः स्फीते मुनिगणपरीते हिमनगे द्रुमावीते
शीते सुरमधुरगीते प्रतिवसन् ।
क्वचिद्ध्यानासक्तो विषयसुविरक्तो भवहरं
स्मरँस्ते पादाब्जं जनिहर समेष्यामि विलयम् ॥ २८॥

सुधापानं ज्ञानं न च विपुलदानं न निगमो
न यागो नो योगो न च निखिलभोगोपरमणम् ।
जपो नो नो तीर्थं व्रतमिह न चोग्रं त्वयि
तपो विना भक्तिं तेऽलं भवभयविनाशाय मधुहन् ॥ २९॥

नमः सर्वेष्टाय श्रुतिशिखरदृष्टाय च नमो
नमोऽसंश्लिष्टाय त्रिभुवननिविष्टाय च नमः ।
नमोविस्पष्टाय प्रणवपरिमृष्टाय च नमो
नमस्ते सर्वात्मन्पुनरपि पुनस्ते मम नमः ॥ ३०॥

कणान्कश्चिद्वृष्टेर्गणननिपुणस्तूर्णमवनेस्तथा-
शेषान्पांसूनमित कलयेच्चापि तु जनः ।
नभः पिण्डीकुर्यादशिरमपि चेच्चर्मवदिदं
तथापीशासौ ते कलयितुमलं नाखिलगुणान् ॥ ३१॥

क्व माहात्म्यं सीमोज्झितमविषयं वेदवचसां विभो
ते मे चेतः क्व च विविधतापाहतमिदम् ।
मयेदं यत्किञ्चिद्गदितमथ बाल्येन तु गुरो
गृहाणैतच्छुद्धार्पितमिह न हेयं हि महताम् ॥ ३२॥

इति हरिस्तवनं सुमनोहरं परमहंसजनेन समीरितम् ।
सुगमसुन्दरसारपदास्पदं तदिदमस्तु हरेरनिशं मुदे ॥ ३३॥

गदारथाङ्गाम्बुजकम्बुधारिणो रमासमाश्लिष्टतनोस्तनोतु नः ।
बिलेशयाधीशशरीरशायिनः शिवं स्तवोऽस्रमयं परं हरेः ॥ ३४॥

पठेदिमं यस्तु नरः परं स्तवं समाहितोघौघघनप्रभञ्जनम् ।
स विन्दतेऽत्राखिलभोगसम्पदो महीयते विष्णुपदे ततो ध्रुवम् ॥ ३५॥

। इति श्रीमत्परमहंसस्वामिब्रह्मानन्दविरचितं
श्रीविष्णुमहिम्नः स्तोत्रं सम्पूर्णम् ।